आकृतिः संस्थानं(१)तस्या अनित्यत्वे तद्व्यङ्ग्यजातिरप्यनित्येति तत्तात्पर्यम् ।

'यद्वा आकृतावपि पदार्थे एष विग्रहो न्याय्यः । ननु चोक्तमाकृतिरनित्येति । नैतत् । नित्या आकृतिः । कथम् ? न क्वचिदुपरतेति कृत्वा सर्वत्रोपरता भवति । द्रव्यान्तरस्था तूपलभ्यते' इति । अत्राकृतिपदेन जातिः । उपरमो ऽनभिव्यक्तिः । आविद्यकः पदार्थो जातिर्याव-द्व्यवहारं ध्रुवत्वात्कूटस्थत्वादविचालित्वादनपायोपजन-

( कुञ्जिकाटीका )

दि, वस्तुतस्तु मृत्तिकैवेति तदर्थः । नित्या आकृतिरित्यत्र हेतुं भाष्यकारः पृच्छति *कथमिति* । समाधत्ते *क्वचिदिति* । क्वचिद्व्यक्तावनभिव्यक्ता नैतावता सर्वत्रानभिव्यक्ता भवति । तस्मान्नित्यत्वं जातेरित्यर्थः । अनित्यता त्रिविधा—संसर्गानित्यता यथा—स्फटिकस्य जपाद्युपधानेन स्वरूपतिरोधानम् । परिणामानित्यता यथा—बदरफलस्य श्यामतातिरोधाने लौहित्याविर्भावः । प्रध्वंसानित्यता सर्वात्मना विनाशः । एतत्त्रिविधव्यत्यासेन नित्यतां समर्थयति *ध्रुवेति* । *कूट-

( कलाटीका )

पर्यवसानं तद्वादित्यर्थः । ननु जातेरनित्यत्वे सिद्धान्तविरोधोऽत आह *आकृतिरिति* । तथाचाविरोधायैव मध्ये इदं लिखितम् । एतेन पूर्वोक्तार्थानुपपादकत्वादिदमत्रायुक्तमित्यपास्तम् । तदाह *एतदिति* । द्वितीयमत इत्यर्थः । अथाद्यमतं समर्थयते *आकृतावपीति* । *न क्वचिदिति* । क्वचिदुपरतेति कृत्वा न सर्वत्रोपरतेत्यन्वयः । ननूपरमो नाशश्चेत्तत्काले एवान्यत्र सत्त्वविरुद्धमत आह *अनभीति* । आविद्याया जातित्वे मानाभावात्तावन्मात्रेणानिर्वाहादाह *आविद्यक इति* । तृतीयमतं तु अग्रे एवं खण्डनयिमिति भावः । ननु परमार्थदृष्ट्या सर्वमनित्यमत आह *यावदिति* । अद्वैतेन लौकिकव्यवहाराभावाद्व्यवहारे च जातेरेकाकारपरामर्शहेतुत्वात्सर्वदा एकाकारपरामर्शदर्शनेन यावद्व्यवहारकालमित्यर्थः । *कूटस्थत्वादिति* । ध्रुवत्वादित्यस्य व्याख्यानं तद्व्याख्यानम्—*अविचालि-

(१) अत्र खसब्ज्ञके मूलपुस्तके—"ब्रह्मदर्शने जातेरप्याविद्यकत्वेनासत्यत्वादनित्यत्वमिति । अनेन अत्र प्रकरणे व्यङ्ग्यव्यञ्जकयोरुभयोरप्याकृतिपदेन ग्रहणं सूचयति-"इति पाठो ऽधिकः ।

विकारित्वाद्वारंवारमुत्पत्त्याद्यभावेनानुत्पत्त्यवृद्ध्यव्यययोगित्वेन नित्येति तद्भावः। एतदभिप्रेत्य 'भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नम्' इति सामान्यलक्षणमुक्तम्। अथावयवसंस्थानरूपाया आकृतेरुक्तहेत्वभावेन प्रकारान्तरेण नित्यत्वमाह 'अथवा यस्मिंस्तत्त्वं न विहन्यते तदपि नित्यम्। तस्य भावस्तत्त्वम्। आकृतावपि तत्त्वं न

( कुञ्जिकाटीका )

स्थत्वादिति*। संसर्गानित्यता परिहृता। कूटमयोघनस्तद्वत्तिष्ठति। संसर्गिनाशे ऽपि स्वयमनष्टेत्यर्थः। अविचालिभिरिति परिणामा ऽनित्यता, अनपायेत्यादिना प्रध्वंसानित्यता परिहृता। उत्पत्तेः सत्तापर्यन्तत्वादनुत्पत्तीत्यनेन जन्मसत्तारूपौ विकारौ निरस्तौ। *अवृद्धीति*। वृद्धिरूपविकाररहितम्। अव्ययमिति विनाशः परिहृतः। *यस्मिंस्तत्त्वमिति*। प्रवाहनित्यताऽनेनोक्ता। तन्नाशे ऽपि तद्धर्मा न नश्यन्ति। आश्रयप्रवाहाविच्छेदादिति भावः। तत्त्वमि·

( कलाटीका )

त्वादिति*। रूपान्तरापत्तिर्विचालः। यथा पयसो दध्यादिरूपता। अनेन परिणामानित्यता परास्ता। अपायोपजनरूपविकारद्वयशून्यत्वादित्यर्थः। तत्र अनपायेति पञ्चमापचयनिरासः। *अनुपजनेति*। चतुर्थपरिणामनिरासः। उत्पत्तेः सत्तापर्यन्तत्वादनुत्पत्तीत्यनेन जन्मसत्तारूपौ भावविकारौ निरस्तौ। अवृद्धीत्यनेन तृतीयो वृद्धिलक्षणो निरस्तः। *अव्ययेति*—षष्ठो विनाशो निरस्तः। एतद्रूपविकाररहितं नित्यम्। इदं च भाष्ये मुख्यत्वेनादौ नित्यत्वं ब्रह्मविषयं यावद्व्यवहारमेकरूपस्थितपदार्थविषये चोक्तं तदाह *नित्यैवतादिति*। द्वितीयविषयत्वे भाष्यान्तरसंमतिमप्याह *तदेवेति*। जातिरूपसामान्यलक्षणमुक्तमिति पाठः। *भाष्ये*। पस्पशायामेवेति भावः। *रूपायाइति*। जातिव्यञ्जिकाया इत्यर्थः। *उक्तहेत्विति*। यावद्व्यवहारकालं मध्ये मध्ये उत्पत्तिनाशयोः सत्त्वेन तदभावरूपोक्तहेत्वभावादित्यर्थः। न प्रागुक्त एव नित्यशब्दार्थः। प्रवाहाविच्छेदेऽतादृश्यपि नित्यत्वव्यवहारादित्याह *तदपीति*। ननु किं तत्त्वमत आह *तस्येति*। यस्मिन्विहते नष्टे ऽपि तद्वृत्तिधर्मो न विहन्यते न नश्यति आश्रयप्रवाहाविच्छेदादित्यर्थः। तत्त्वपदेन तद्व्यवहारो लक्ष्यते। निर्धर्मकव्यव·

विहन्यते' इति(१)। अवयवसंस्थानरूपाया आकृतेरा-श्रयप्रवाहाविच्छेदात्तद्धर्मस्याविघात इत्याशयकेनानेन प्रवाहनित्यतोक्ता ।

प्रवाहनित्यतां न्यायवार्तिककारोऽप्याह—'नित्या वर्णाः नित्या वेदा इति च सम्प्रदायाविच्छेदात् । नित्या पृथिवी नित्याः पर्वता इतिवत् । तान्येव वेदवाक्यानि मन्वन्तरचतुर्युगान्तरेष्वपि सम्प्रदायाविच्छेदेन प्रव-र्त्तन्ते । एतत् मन्वादिवाक्येष्वपि तुल्यम्' इति ।

व्याससूत्रमपि "समाननामरूपत्वाच्चावृत्तावप्यवि-

---

( कुञ्जिकाटीका )

त्यस्यार्थमाह *तस्य भाव इति*। *संप्रदायाविच्छेदादिति*। अ-यं नित्यत्वे हेतुः ।

*तुल्यमितीत्यन्तं वार्तिकोक्तिः*। *समानेति*। सृष्ट्यन्तरेऽपि नामरूपसाम्यान्नित्यत्वस्याविरोध इत्यर्थः । तथाच श्रुतिः "यज्ञेन वाचः

( कलाटीका )

हाराभावाच्चष्टव्यक्तेर्व्यवहाराभावाच्च तद्धर्मव्यवहार इत्युक्तः । आश्रय-प्रवाहानुच्छेदाच्च तद्धर्मव्यवहाराविघात इति तात्पर्यम् । तदाह *अ-वयवेति*। *इत्याशयेनेति*। बहुव्रीहिः । तद्विशेष्यं—*अनेनेति*। ग्र-न्थेनेत्यर्थः । *उक्तेति*। इत्युक्तामिति शेषः । भाष्ये इत्यस्यात्रान्वयः । तस्य भाव इत्यादिहेलाराज इत्यन्तं ग्रन्थे पाठान्तरं क्वचित्पुस्तके दृश्यते तदयुक्तम् । प्रागुक्तत्वादिति बोध्यम् ।

आद्यस्य परसंमतत्वं प्रसिद्धमेवेति द्वितीये परसंमतिमपि तदीया-नामज्ञाननिरासायाह *प्रवाहेति*। अद्वैतिसंमतिमप्याह *व्यासेति*। प्रथमाध्यायतृतीयपादस्थदेवताधिकरणस्थम् । ननु जगत्कारणत्वादेव वेदस्य नित्यत्वमित्यर्थकेन "अत एव च नित्यत्वम्" इतिपूर्वसूत्रेणोक्तं नित्यत्वमयुक्तम्, सृष्टिप्रलययोरुत्पत्तिप्रलयदर्शनाद्, अत आह *स-मानेति*। "दर्शनात् स्मृतेश्च" इति सूत्रशेषः । आवृत्तौ पुनःपुनरुत्प-

---

(१) "यस्मिन्विहते नष्टेऽपि तद्धर्मो न विहन्यत इत्यर्थः । आकृतिव्यक्त्योश्च परस्परं भावत्वं घट-त्वादि घटादिरूपमेव । जातेराकृतेश्चाविषयकत्वेऽपि तत्तदुपाध्यवच्छिन्नं ब्रह्मैव द्रव्यम् । तस्याविषयकत्वे तदवच्छिन्नं ब्रह्मैव आकृतिजातिश्चेति बोध्यम् । तत्त्वपदेन च तद्व्यवहारो लक्ष्यते । निर्धर्मकव्यवहारा-भावाच्च धर्मव्यवहार इत्युक्तम्" । इति पाठोऽधिको पुस्तके खसंज्ञके ।

रोधः" इति । वेदस्य तदर्थानां च नामरूपप्रवाहानुच्छेद एव नित्यत्वमिति तदर्थः । उपाधिसंनिवेशादिशब्दैश्चोपाधीनामपि तदात्मकत्वात् ब्रह्मैव वाच्यम् ।

यत्तु अविद्याशब्देनापि विच्छिन्नप्रकाशं ब्रह्मैव । विच्छेदोऽपि तद्रूप एवेति नाद्वैतहानिरिति ।

---

( कुञ्जिकाटीका )

पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम्" इति । यज्ञेन पुण्येन कर्मणा वाचा वेदस्य पदवीयं मार्गमायन् प्राप्तवन्तः । *तदात्मकत्वात्* ब्रह्मात्मकत्वात् । *विच्छेदोऽपीति* । तन्मते अभावस्याधिकरणस्वरूपत्वात । भूतलादेः स्वरूपेण भावत्वेऽपि रूपान्तरेणाभावत्वाभ्युपगमात् । तदाहुः—

( कलाटीका )

त्यावपि समाननामरूपत्वात् समानशब्दार्थत्वाद् विवक्षितस्यैकरूपप्रवाहाविच्छेदरूपनित्यत्वस्याविरोधः । श्वासप्रश्वासवत् पुरुषबुद्ध्यजन्यत्वेन च वेदे नाप्रामाण्यशङ्का । समाननामरूपत्वे प्रमाणं च—

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये"
"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवं च पृथिवीं चान्तरिक्षमथो सुवः" ॥ इति च श्रुतिः,
"अनादिनिधना दिव्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाविभूतयः" ॥ इति
"यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु" ॥ इति च ।

स्मृतिश्चेत्यर्थः । एवं च ब्रह्मणः स्वयंभूत्ववद्वेदस्यापि तत्त्वम् । सृष्ट्याद्यकाले प्रादुर्भावः प्रलये च लयो न तु मध्ये मध्ये घटादिवदिति नित्यत्वव्यवहारस्तस्येति भावः । तदाह *वेदस्येति* । ननु तत्तदाकारादिरूपोपाधेर्द्व्यनित्यतापक्षे उक्तत्वेन तस्य च ततो भेदलाभेन प्राक्सिद्धान्तिताद्वैतहानिरिति शङ्कानिरासाय प्रागुक्तमपि कञ्चिद्विशेषं प्रागनुक्तमेव प्रसङ्गाद्वक्तुमनुवदति *उपाधीति*। *संनिवेशः*—संस्थानम्। *ब्रह्मैवेति* । पूर्वपूर्ववासनावशात्परमात्मानं एवोपाध्यादिरूपेण तद्वैशिष्ट्येन च भानादित्युक्तं प्राक् । तथा च न तद्धानिः । तमेवाह *यत्त्वित्यादि* । *विच्छेदोऽपीति* । स्वकल्पितत्यादिः । अत्र परोक्तदोष-

अत्र वदन्ति । विच्छेदस्य ब्रह्मरूपत्वे तत्त्वज्ञाननिवर्त्यतानापत्तिरिति ।

वस्तुतस्तु विच्छेदोऽसत्य एव । रज्जूरगवत् । सर्वोऽपि प्रपञ्च एवमेव । तत्तद्भोगप्रापकप्राण्यदृष्टैश्च ब्रह्मणस्तथा विवर्तः । एवञ्च तन्नाश्यतोपपन्नेति परमार्थसारविवरणे प्रपञ्चितमस्माभिः । 'यथा स्वप्न एकस्यैवान्तःकरणस्य निरुद्धानेकपदार्थरूपत्वं तथा जागरे मायासहकारेण ब्रह्मणस्तथात्वम् । यथा च जागरे अप्रतीयमान-

( कुञ्जिकाटीका )

भावान्तरमभावो हि कयाचित्तु व्यपेक्षया । इति ।

*असत्य एवेति* । अयं भावः । यद्यपि विच्छेदो नाम प्रतिबन्धः, तस्य स्वीकारेऽद्वैतहानिः प्राप्ता, तथापि अज्ञानस्यैव प्रतिबन्धकत्वस्वीकारेण वास्तविकप्रतिबन्धाभाव इति । अविद्या च अनादिभावरूपत्वे सति ज्ञानविवर्त्या । नच सादिशुक्त्याद्यवच्छिन्नचैतन्यावरकाज्ञानेऽव्याप्तिः । रूप्योपादानाज्ञानस्याप्यनादिचैतन्याश्रितत्वेनानादित्वात् । *एवमेव* । असत्य एव । असत्यस्यापि व्यावहारिकसत्यत्वं दर्शयति *तत्तद्भोगेति* । *विवर्त इति* । उपादानसमसत्ताककार्यापत्तिः परिणामः । उपादानविषमसत्ताककार्यापत्तिर्विवर्त्तः । *यथा स्वप्ने इति* । अयं भावः । स्वप्नावस्थागतः प्रपञ्चो जाग्रद्दशया बाध्यमानत्वादसत्य इति सर्वानुमतं, तेनैव दृष्टान्तेन जागरायां यो भावभेदस्तस्य तुरीयदशायामननुवृत्तत्वादसत्यत्वम् । सर्वावस्थास्वनुगतं संविन्मात्रं सत्यम् । चिच्छक्तेरावरको मोह एव निद्रा नाम । तस्य चाविद्यावृत्तिरूपत्वान्मिथ्यात्वम् । एवं जाग्रत्स्वप्नावस्थागतमूर्तक्रियाविवर्तरूपमसदेवेति ।

( कलाटीका )

माह *अत्रेति* । विच्छेदांशे । तदुभयासांगत्य प्रकटयन् सिद्धान्तमाह *वस्तुतस्त्वित्याद्युपपन्नेत्यन्तेन*। *एवमेव*। असत्य एव । प्राण्यदृष्टवासनासहकारेणेति पाठः । प्राण्यदृष्टैश्चेति पाठान्तरम् । *तथा* । प्रपञ्चरूपतया । *एवं च* । तस्यासत्यत्वे च । *तन्नाश्यता* । तत्त्वज्ञाननाश्यता, सर्वप्रपञ्चवद् विच्छेदस्यापि । *इतीति* । प्रपञ्चितं पूर्वत्र परमार्थसारविवरणे चास्माभिरिति पाठः । ननु कथमेकस्य युगपत्तथात्वमतस्तत्राह प्रच्युतस्येत्यादिप्रागुक्तहारिकाव्याख्यानस्थहेलाराः-

स्वात्स्वाप्नस्य मिथ्यात्वं तथा तुरीयदशायामननुवृत्ते-रस्य प्रपञ्चस्य मिथ्यात्वं संविदश्च सत्यत्वम्। उपाधि-वैशिष्ट्येन तदेव व्यवहारास्पदम्। निरुपाधिकं तु सर्व-व्यवहाराविषय' इति हेलाराजः।

आकृतिस्तु यत्र सम्भवति तत्रैव। गौतमीये "जात्या-कृतिव्यक्तयः पदार्थ" इति सूत्रे व्यक्तिपदेनच संख्यादिनि-

---

( कुञ्जिकाटीका )

*अनेकपदार्थरूपत्वमेवेति*। अविद्यावृत्तिभेदात्। *तथात्वम्*। अ-नेकरूपत्वम्। जाग्रदादिभिन्नत्वं तुरीयत्वम्। *तदेव*। ब्रह्मैव। *स-र्वव्यवहाराविषय इति*। "यद्वाचाऽनभ्युदितम्" इत्यादिश्रुतिभिर्व्य-वहाराविषयत्वस्यैवोपपादनात्। नन्वेवं "तं त्वेवमौपनिषदं पुरुषं पृ-च्छामि" इतिश्रुतिविरोधः। सत्यम्। "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह" इतिश्रुत्या वाङ्मनसातीतत्वमेव तस्य। औपनिषदत्वं तु उपनिषज्जन्यान्तःकरणवृत्त्या स्वात्मानमप्यविषयीकुर्वन्त्या प्रतिबन्धक-ज्ञाननिवृत्तौ स स्फुरतीत्यर्थः। ननु घटादीनामाकारविशेषस्य सर्वत्र व्य-क्तिषु नियतत्वाभावात्कथमाकृतेर्वाच्यत्वं गौतमेनोक्तमत आह *आकृ-तिस्त्विति*। यत्राकृतिरेवं नियमतः पदेन प्रत्याय्यते तत्रैवाकृतिर्गौत-मसूत्रे वाच्यत्वेन विवक्षितेत्यर्थः। ननु घटत्वादौ जातिरपि व्यक्तिरेवे-त्यतो व्यक्तिपदेन गतार्थतां निराकरोति *व्यक्तिपदेनचेति*। *सं-ख्यादीति*। संख्याकारकविशिष्टेत्यर्थः। कुत्र आकृतिमात्रप्रतीतिस्त-

( कलाटीका )

जम्। *यथेत्यादि*। *तथात्वम्*। विरुद्धानेकपदार्थरूपत्वम्। *सं-विदश्च*। ब्रह्मणश्च। *उपाधीत्यग्रिमान्वयि*। तदेव ब्रह्मैव। मायाया अपि दुग्धस्य दधिभावेनेव न प्रपञ्चरूपः परिणामः किन्तु स्वर्णस्य कुण्डलरूपेणेव। एवंविधपरिणामो विवर्तपदेनोच्यते। अतएव प्रलये पुनरविद्यारूपेण सर्वावस्थानम्। यदि दधिवत्परिणमेत्तत्तदा तस्य पु-नर्दुग्धरूपत्ववत्प्रपञ्चस्य मायारूपेणावस्थानं भज्येत। तस्या यत् सं-स्काररूपेणावस्थानं तदेव ब्रह्मणि सर्वलयत्वेन व्यवह्रियते इति बोध्य-म्। गौतमीये आकृतेः पदार्थत्वं सम्भवाभिप्रायं न तु सार्वत्रिकमित्याह *काऽऽकृतिस्त्विति*। विशेषं वक्तुं प्रागुक्तमपि पौनरुक्त्यपरिहारमनु-वदति *गौतमीये इति*। जातिव्यक्त्योरपि तत्त्वमौत्सर्गिकं नतु सा-

शिष्टा व्यक्तिः। "पिष्टकमय्यो गाव" इत्यादावाकृतिरेव। वस्तुतस्तत्रापि जातिः। प्राण्याश्रितत्वेनाभिव्यक्ता तु पुण्यपापसाधनम्। तदुक्तं हरिणा—

चित्रादिष्वप्यभिव्यक्तिर्जातीनां कैश्चिदिष्यते।
प्राण्याश्रितास्तु ताः प्राप्तौ निमित्तं पुण्यपापयोः॥ इति।

चित्रादीत्यादिना प्रतिमाः। प्राण्याश्रिता इति प्राणिपदं कृतदेवताऽऽवाहनप्रतिमोपलक्षणम्। विसर्जने तु कृते ता न पुण्यपापसाधनम्।

(कुञ्जिकाटीका)

आह *पिष्टकमय्य इति*। स्वमतमाह *वस्तुत इति*। अचेतनजातीनामपि सर्वगतत्वमुपपादयति *चित्रादिष्विति*। आलेख्यलिखितेऽपि ब्राह्मणे सादृश्यात्तदाकारानुकारप्रत्ययोदयात्तत्रापि जातिप्रकाशः। चित्रस्योपघाते त्वधर्मो न भवति। एवं चित्रस्थब्राह्मणपूजायां धर्मोऽपि न भवति। कैश्चिदित्यरुचिबीजं तु मुख्यसादृश्यात्तत्प्रतिकृतिषु तत्प्रत्ययो भवति, न तु तद्वशात्तत्र जातिसमवाय इति। *कृतदेवतेति*। तत्र हि प्रतिष्ठाविधिना देवतानां प्रतिमायामहङ्कारो भवति। चण्डालादिस्पर्शे च तदभिमानाभावः। ननु प्रतिमायां देवताबुद्धेरध्यासे भ्रान्त्यापत्तिः। सत्यम्। अन्योन्यस्मिन्नन्योन्यबुद्धिरध्यासः। प्रतिमायामेव हि देवतादृष्टिर्न देवतायां प्रतिमादृष्टिः। *आवाहनम्*। अभिव्यक्त्यनुसन्धानम्। *विसर्जनम्*। निजरूपेणावस्था-

(कलाटीका)

वैत्रिकामित्याह*पिष्टकेति*। एवेनोभयव्यवच्छेदः। *जातिः*। सापि। तेनाकृतिसमुच्चयः। पूर्वेण तु व्यक्तिमात्रव्यवच्छेद इति भावः। नन्वेवं तन्नाशादौ प्रायश्चित्ताद्यापत्तिरत आह *प्राणीति*। तदाश्रितत्वेनाश्रयोत्पत्त्यनन्तरं तत्रावयवसंस्थानाभिव्यङ्ग्या सती स्वरूपसतीत्यर्थः। ननु ज्ञानमेव तत्साधनम्, अज्ञानेऽपि प्रायश्चित्ताद्युपदेशात्। *अपिना* प्राणिसमुच्चयः। *कैश्चित*। तत्त्वज्ञैः। उत्तरार्धवैयर्थ्यं परिहरन् शास्त्राविरोधमाह *प्राण्याश्रितेति*। प्रतिमादीत्यर्थः। तेन चित्रसंग्रहः। प्राणिषु तु तथा स्पष्टमेवेति न तत्रास्योपयोग इति (१)नापिरुक्तः। विशेषणफलमाह *विसर्जने इति*। नन्वेवमपि शालग्रामा-

(१) अपिनोक्त इति योजना।

ब्राह्मणत्वादयो भावाः सर्वत्रैव च ते स्थिताः ।
अभिव्यक्ताः स्वकार्याणां साधका इति च स्मृतिः ॥ इति च
यत्रैवोपदेशादिनाऽभिव्यक्तास्तत्रैव स्वकार्यसाध-
काः । प्रतिनियतव्यञ्जकव्यङ्ग्यत्वादिति भावः । सरूपसू-
त्रे भाष्ये ध्वनितं सर्वमेतत् । स्वर्गापूर्वदेवताशब्दादौ

( कुञ्जिकाटीका )

नचिन्तनम् । पूर्वं व्यक्तिसर्वगतत्वं सामान्यानामुक्तम्, इदानीं सर्वगत-त्वनयेऽप्याह *ब्राह्मणत्वादय इति* । भवन्ति सर्वत्रेति भावा ब्राह्म-णत्वादयः । ते प्राणिषु क्षत्रियादिष्ववस्थितत्वात्सर्वगताः । तथापि "ब्राह्मणमालभेत" इत्यादौ नाव्यवस्थाप्रसङ्गः । यत्रैव हि उपदेशादि-नाऽभिव्यक्तिमासादयन्ति तत्रैव स्वकार्यं साधयन्तीति पारम्पर्येण सम-र्थते । एवं च घटत्वादिजातयः प्रलये परमाण्वादिष्ववस्थिताः । स्मृ-तिरित्यनेन जातिवादिवाजप्यायनमते स्मरणं सूचितम् । *प्रतिनियते-ति* । तच्च ब्राह्मणत्वं विशुद्धमातापित्रोर्योनिजत्वव्यङ्ग्यम् । ननु गवा-दिशब्दोच्चारणे आकारविशेषस्याऽपि प्रतीतेरस्त्वाकृतेरपि शब्दार्थत्व-मत आह *स्वर्गापूर्वेति* । यदि हि आकृतिरपि शब्दार्थः स्यात् तदा स्वर्गादिशब्दे ऽपि तत्प्रतीत्यापत्तिः । तस्मान्निष्कृष्टोऽर्थमात्र एव श-

( कलाटीका )

ब्दसंग्रहस्तत्रावाहनाद्यभावात् । तत्त्वं तु तत्रापि शास्त्रसंमतमत आह ह्यनन्तरम् *ब्राह्मणत्वेति* । चा(१)र्थो ये इत्यादिः । *भावाः* । जात-यः । *(२)चः* । स्थितिसमुच्चये । *स्मृतिः* । स्मरणम् । *(३)चः* । पूर्वहरिसमुच्चये । अभीत्यस्य साकाङ्क्षत्वादाह *यत्रैवोपदेशेति* । (४)अयञ्च शास्त्रीयः । आदिना स्वप्ने फललाभादिः । *प्रतिनियतेति* । विशेषेत्यर्थः । *सर्वमेतदिति* । सर्वत्र जातिसत्त्वम्, तादृशे तस्या एव तत्साधनत्वं चेत्यर्थः । तत्रहि 'आकृत्यभिधानाद्वैकविभक्तौ वाजप्यायनः' इत्यादिना तत्सत्त्वं तदेकत्वं तस्या वाच्यत्वञ्चाङ्गीकृत्य नानार्थेष्वपि त-था स्वीकृत्य सरूपसूत्रं प्रत्याख्यातम् । सर्वत्र तदसत्त्वादौ तु तदर्थन्त-दावश्यकत्वेन तदसङ्गतिः स्पष्टैव । आकृतिस्त्वत्युक्तफलमाह *स्व-र्गेति* । शब्दार्थभूताया आकृतेरवयवसंस्थानरूपत्वस्योक्तभाष्योक्त-

---

( १ ) यत्तदोर्नित्यसाकाङ्क्षत्वेनापेक्षितानुक्तयोरित्यस्यानुक्तसंग्राहकोक्तसमुच्चयार्थेन चेनेत्यर्थः ।
( २ ) साधकाइतिचेत्यन्वयः । ( ३ ) श्लोकेबाह्य इतिचेत्यन्वयः ।
( ४ ) उपदेश इत्यर्थः ।

नाकृतिर्बोध्या । दर्शनाभ्याससहकारेणैव तद्बोधात् । नव्यनैयायिकग्रन्थे प्रकृतिप्रत्ययार्थविचारस्तु व्याकरणवासनावासितान्तःकरणतया तत्रैव वास्तवत्वभ्रमेणेति बोध्यम् ।

अनन्ता वर्णा उत्पादविनाशशालिनस्तत्समूहश्च पदं बोधकमिति पक्षे तु पदानामानन्त्याच्छक्तिग्रहासम्भवेनानुगताकारप्रतीत्या सिद्धायास्तत्तत्पदगतघटपदत्वादिजातेर्वाचकत्वम् । अर्थगतजातेः शक्यत्ववत् । यथा भ्रमणत्वादिजातिश्चरमक्रियाप्रत्यक्षव्यङ्ग्या एवमेषापि चरमवर्णप्रत्यक्षव्यङ्ग्या । समुदाये बौद्धे भ्रमणत्ववदेषापि

(कुञ्जिकाटीका)

व्दार्थः । ननु कथमाकारविशेषस्य प्रतीतिस्तत्राह *दर्शनाभ्यासेति* । सास्नादिमत्स्वेव गोशब्दप्रयोगं पश्यतां तद्दर्शनाभ्यासादाकारविशेषप्रत्ययो नान्तरीयको न शाब्द इत्यर्थः ।

जातिस्फोटं व्युत्पादयति *अनन्त इति* । एतन्मते वर्णानामानित्यत्वात्तद्गता जातिरेव नित्येति सैव स्फोटशब्देनोच्यते । तदाश्रया एव तु ध्वनय उच्यन्ते । *चरमाक्रियेति* । विशिष्टप्रयत्नजनितेन विक्षेपविशेषणाभिव्यक्ता भ्रमणत्वादिजातिः प्रत्येकसमासाऽपि न गृह्यते भ्रमणानामन्त्यवृत्तौ तु गृह्यते इत्यर्थः । *एषा* । पदजातिः । *बौद्धे इ-

(कलाटीका)

त्वादिति भावः । एवञ्च तथा सूत्रयता गौतमेन पदलक्षणादिकरणान्न्यायमते पदस्फोट एव । तद् ध्वनयश्चाह *नव्येति* । अत्रापि वाक्यस्फोटस्यैव तत्त्वादाह *भ्रमेणेति* ।

एवं वाक्यव्यक्तिस्फोटं सिद्धान्तभूतमुक्त्वा प्राचोक्तं जातिस्फोटं तात्सिद्धान्तभूतमेकदेशिमतेनाह *अनन्ता इति* । सिद्धान्तरीत्याऽऽह *अनुगतेति* । इदं घटपदमित्यादीत्यर्थः । असम्भवनिरासायाह *अर्थेति* । ननु तद्व्यञ्जकत्वस्य प्रतिवर्णं सत्त्वे प्राचोक्तवर्णस्फोटपक्षोक्तदोषाः, सरो रस इत्यादौ बोधाविशेषापत्तिश्चात आह *यथाचेति* । *चरमवर्णेति* । पूर्वपूर्ववर्णानुभवसहकृतेत्यादिः । एवं च नोक्तदोषः । नन्वेवमपि प्रत्येकं तत्सत्त्वे आद्यदोषाभाव एवात आह *क्रियेति* । ननु क्रमिकवर्णसमुदायस्य यौगपद्यासम्भवेनानारब्धे तु गोशब्दे गोशब्द-

तादृशे वर्णसमुदाये व्यासज्यवृत्तिः। तदुक्तम्—
अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता। इति।
यद्वा शक्यतावच्छेदके शक्तेरिव शक्ततावच्छेदकेऽपि तस्याः सत्त्वमिति तस्याः स्फोटत्वव्यवहारः।
इति जातिस्फोटनिष्कर्षः।

परे तु यथाऽद्वैतिनामात्मभेद औपाधिको मायाकृतः चेत-

( कुञ्जिकाटीका )

ति*। व्यापाराणां समुदायासम्भवेन तत्समूहरूपक्रियाया अपि प्रत्यक्षासम्भवात् बौद्धे समुदाये जातिर्व्यज्यते इत्यर्थः। वर्णानामाशुविनाशित्वादाह *तादृशे इति*। बौद्धे इत्यर्थः। *व्यासज्यवृत्तिरिति*। तेन नैकवर्णोच्चारणे ऽर्थाभिव्यक्तिः। अतएवोक्तम्—अनेकव्यक्तीति*। अनेकवर्णव्यक्तीत्यर्थः। तथा च भिन्नप्रयत्नोदीरितध्वन्यभिव्यक्तो जातिस्फोटोऽयं विलक्षण एव। *यद्वेति*। यथा घटत्वादिकं वाच्यतावच्छेदकं तथा घटपदत्वादिकं शक्ततावच्छेदकमित्यर्थः।

*आत्मभेद इति*। अन्तःकरणावच्छिन्नं चैतन्यं जीवः। जीवाकाराऽहंत्वप्रकारकाविद्यावृत्तिपरिणतो जीवोऽन्तःकरणेनाभिव्यज्यते। मायावच्छिन्नं चैतन्यं परमेश्वरः। अन्तःकरणभेदाज्जीवानां भेदः। तदुक्तम्—

तस्यैकमपि चैतन्यं बहुधा प्रविभज्यते।
(१)यथाऽग्न्युत्था विस्फुलिङ्गा वारिराशेरिवोदकम्॥

*औपाधिक इति*। ननु चिन्मात्रस्याज्ञानं न स्वाभाविकं किन्त्वौ-

( कलाटीका )

त्वं कथं भवेदिति तत्र जातिर्दुरुपपदैवात आह *बौद्धे इति*। उभयत्र हरिसम्मतिमाह *तदुक्तमिति*। अनेकाभिर्वर्णव्यक्तिभिरभिव्यङ्ग्या जातिः स्फोटो वाचिकाऽभिमतेत्यर्थः। स्फोटपदस्य च स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या वाचक इत्यर्थः। एवञ्च ज्ञाताया एव तस्या वाचकत्वमिति स्फोटस्य सदातनत्वात्सर्वदाऽर्थापत्तिरिति निरस्तम्। इदं चाकृत्यधिकरणन्यायेनोक्तम्। न्यायादिमतेनाप्याह *यद्वेति*। *इतिजातीति*। इत्येवं प्राचोक्तजातिस्फोटनिष्कर्ष इत्यर्थः।

वस्तुतोऽस्यायुक्तत्वात्सिद्धान्तमतेनाह *परेत्विति*। औपाधिक-

(१) "अङ्गारकितमुत्पत्ति" इति पाठान्तरम्।

नस्यैकत्वेऽप्यस्त्येव, तत्रानुगमार्थं जातिकल्पना च दृश्यते, तथैकस्यैव तत्तत्कालतत्तद्वर्णानुरागरूपोपाधिभेदेनानन्त्यात्तत्पक्षे ऽपि अनुगतशक्तिग्रहाय जातिरावश्यकी । परं तेषां तत्तदुपाध्यवच्छिन्नः स्फोटो व्यक्तिपदभाक् । तत्तदुपाध्युपलक्षितश्च जातिपदभाक् । पूर्वमते तु जातिः पदार्थान्तरम् ।

यत्तु सर्वत्र व्यक्तिरनित्या तत्तद्व्यक्त्युपाहितं ब्रह्मैव जातिरिति ।

तन्न । आविद्याकानन्तव्यक्तिकल्पनापेक्षया जात्यादेरेव हेतुत्वकल्पने लाघवात् । अत एव "अग्नेरग्नित्वमपागाद्" इत्यादिश्रुतौ धर्मस्यैव नाश उक्तः । अत एव "सिद्धे शब्दार्थसम्बन्धे" इति वार्त्तिके आविद्यकः पदार्थो

---

( कुञ्जिकाटीका )

पाधिकम्, तत्र स्वस्यैवोपाधित्वे आत्माश्रय इति चेन्न । भेदस्य स्वभेदकत्ववत्स्वस्यैवोपाधित्वात् । चेतनस्यैकत्वेऽपि आत्मभेदोऽस्त्येवेत्यन्वयः । *अनुगमार्थमिति* । नियतशब्दव्यवहारार्थमित्यर्थः ।

इति श्रीमदाचार्यकृष्णमित्रकृतायां कुञ्जिकायां वाच्यवाचकशक्तीनां निर्णयः ॥

---

( कलाटीका )

इत्यस्य व्याख्या *मायेति* । *तत्र* नानात्मसु । *एकस्यैव* । वाक्यस्फोटस्यैव । *तत्पक्षे ऽपि* । प्रागुक्तसिद्धान्तपक्षेऽपि । अत्र नाधिकं किञ्चित् कल्प्यमित्याह *परमिति* । केवलमित्यर्थः । *तेषाम्* । सिद्धान्तिनाम् । एतेनातिरिक्तजातिकल्पने किं स्फोटकल्पनयेत्यपास्तम् । तद् ध्वनयन्नाह *पूर्वेति* । आविद्यकधर्मविशेष इत्यर्थः । सकलजीर्णोक्तिं खण्डयति *यत्त्विति* । आदिनोपाधिः । *तत्त्वकल्पने इति* । आविद्यकत्वकल्पने इत्यर्थः । इदमेव पूर्वं किञ्चेत्यादिनोक्तम् । एवेनाश्रयव्यवच्छेदः । स च नारायण इत्यपि प्रागुक्तम् । अत्रश्रुतिसंमतिमुक्त्वा भाष्यसंमतिमप्याह *अत एवचेति* । वार्त्तिके तद्व्या-

जातिर्यावद्व्यवहारं नित्या प्रवाहनित्या वेति द्वेधैवाकृते-र्नित्यत्वमुक्तम् । तच्चोपपादितमित्याहुः ।

इति वाच्यवाचकशक्तीनां निर्णयः ।

वाक्यसमग्रग्राहिका आकाङ्क्षा । सा चैकपदार्थज्ञाने तदर्थान्वययोग्यस्यार्थस्य यज्ज्ञानं तद्विषयेच्छा 'अस्या-न्वय्यर्थः कः' इत्येवंरूपा पुरुषनिष्ठैव । तथापि तस्या आकाङ्क्षाविषयेऽर्थे आरोपः । एतदेवाभिधानापर्यवसा-

( कुञ्जिकाटीका )

*सा चैकेति* । यथा घटादिपदार्थज्ञानानन्तरं तदन्वयिन आनय-नादेर्जिज्ञासा भवति । यद्यपि 'घटमानय' इतिवाक्ये द्वयोरपि पदार्थ-योरवगतत्वान्नास्ति जिज्ञासा, तथापि एकपदार्थज्ञानमात्र इत्यर्थः । *तद्विषयेच्छेति* । ज्ञानविषयिणी इच्छेत्यर्थः । *पुरुषनिष्ठैवेति* । इच्छारूपायास्तस्यास्तत्रैवौचित्यात् । *अर्थे आरोप इति* । विषयता-सम्बन्धेनाकाङ्क्षाया अर्थेऽपि सत्त्वात् । *एतदेवेति* । अभिधानस्य बोधकत्वस्यापर्यवसानमित्यर्थः । नन्वाकाङ्क्षायाः शाब्दबोधहेतुत्वात्प-

( कलाटीका )

ख्यानावसरे, द्वितीयमाविद्यकावयवसंस्थानविषयं न जातिविषयमिति ध्वनयन्नाह *आकृतेरिति* । भाष्ये इति भावः । *तच्चोपेति* । अ-नुपद्मेवेति भावः ।

इतिवाच्यादिनिर्णयव्याख्यानम् ।

अथ तद्धेतुत्वादाकाङ्क्षादिनिरूपणमित्याह *वाक्येति* । ऐश्वरे-त्यर्थः । नन्वाकाङ्क्षा सामान्यत इच्छा कोशादिप्रसिद्धेति कथं तस्या-स्तद्ग्राहकत्वमतः प्रकृतोपयोगिविशेषरूपां तामाह *सा चेति* । ज्ञाने सति यज्ज्ञानं भवति तद्विषयेच्छेति । ज्ञानविषयविषयेच्छेत्यर्थः । तद्-वाह *अस्येति* । इयमपि न प्रकृतोपयोगिनी इत्याह *पुरुषेति* । यद्यपीत्यादिः । विषयतासम्बन्धस्य विशिष्टबुद्ध्यनियामकत्वस्योपक्रमे एवोक्तत्वादाह *आरोप इति* । *एतदेवेति* । आरोपितार्थनिष्ठा-काङ्क्षारूपमेवेत्यर्थः । अभिधानापर्यवसानमाकाङ्क्षेति वृद्धोक्तिरिति भा-

नमित्युच्यते । 'अयमर्थोऽर्थान्तरसाकाङ्क्ष' इति व्यवहा-
रात् । पदे तु नारोपः, मानाभावात् । अर्थबोधोत्तरमेव
जिज्ञासोदयाच्च । 'पदं साकाङ्क्षम्' इति तु साकाङ्क्षार्थबो-
धकमित्यर्थकम् ।

तदुक्तं समर्थसूत्रे भाष्ये 'परस्परव्यपेक्षां सामर्थ्य-
मेके । का पुनः शब्दयोर्व्यपेक्षा । न ब्रूमः शब्दयोरिति ।
किं तर्हि ? अर्थयोः । इह राजा पुरुषमपेक्षते ममा-
यमिति, पुरुषो राजानमपेक्षते अहमस्येति' इति ।
ईदृशजिज्ञासोत्थापकं चैकपदार्थेऽपरपदार्थव्यतिरेकप्र-

---

( कुञ्जिकाटीका )

दनिष्टत्वमेव युक्तमत आह *एकपदार्थे इति* । भवति चानयपदार्था-
भावे घटपदार्थे ऽन्वयबोधाजनकत्वम् । पदार्थोपस्थित्यनन्तरमेवान्वय-
बोधोत्पत्तेरर्थस्यैव जनकत्वमिति भावः । *अपरपदार्थव्यतिरेकः* ।

( कलाटीका )

वः । बोधापूर्त्तिरिति तदर्थः । उक्तहेतोरेवारोपे बीजत्वमाह *अयमर्थ-
इति* । एवव्यवच्छेद्यं ध्वनयन्नाह *पदेत्विति* । *मानेति* । तथा
व्यवहाराभावादित्यर्थः । अर्थविषयकत्वमेव तस्यां न पदविषयकत्वमि-
ति अन्यसम्बन्धादपि नारोप इत्याह *अर्थेति* । नन्विदं पदमितरप-
दसाकाङ्क्षमिति व्यवहारो बीजमस्त्येव तत्रापीत्यत आह *पदमिति*।
'प्रविश पिण्डीम्' इति न्यायेनाह *साकाङ्क्षार्थेति*। अन्यथा भाष्यवि-
रोधोऽपीति सूचयन्नाह *तदुक्तमिति* । एवेन यत्पदस्य यत्पदव्यति-
रेकप्रयुक्तान्वयबोधाजनकत्वं तत्पदे तत्पदवत्त्वमाकाङ्क्षा, तज्ज्ञानं तत्र
तद्रूपां वर्णयन्तो ऽन्ये सर्वेऽपि परास्ताः । तदेतद् ध्वनयन्ननयाऽपि कथं
प्रकृतसिद्धिरिति शङ्कानिरासायाह *ईदृशेति* । अस्या उपयोगमाह

युक्तस्यान्वयबोधाजनकत्वस्य ज्ञानमिति तद्विषये तादृशान्वयबोधाजनकत्वे ऽपि 'आकाङ्क्षा' इति व्यवहारः। एतज्ज्ञानस्य बोधहेतुत्वादेकवारमन्वयबोधे जाते तदजनकत्वज्ञानाभावान्न पुनरन्वयबोधः। कार्यसहवर्तित्वेनैव तस्य हेतुत्वान्न सर्वत्र बोधद्वयम्। अन्यथा प्रथ-

(कुञ्जिकाटीका)

अपरपदार्थज्ञानाभावः। तेन घटस्य सत्ता नास्तीत्यत्र नाव्याप्तिः। मौनिश्लोके ऽव्याप्तिवारणाय पदज्ञानस्य हेतुत्वावश्यकतया पदार्थनिष्ठैवाकाङ्क्षेति तात्पर्यम्। *तद्विषये*। बोधाजनकत्वज्ञानविषये। नन्वाकाङ्क्षायोग्यतयोः को भेद इति चेद्। इत्थम्। योग्यता यावद्वस्तुस्थायिनी जाते ऽपि बोधेऽस्त्येव, आकाङ्क्षा तु नास्तीति तयोर्भेदः। नन्वन्वयबोधे जाते पुनरप्यन्वयबोधापत्तिरत आह–*तदजनकत्वेति*। अत एवाजनितान्वयबोधजनकत्वमाकाङ्क्षेति परे। नन्वाकाङ्क्षानिश्चयस्य निश्चयत्वघटिततया लाघवादनाकाङ्क्षाज्ञानाभावस्यैव हेतुत्वमस्त्विति चेन्न। तत्राप्रामाण्यनिर्णयस्योत्तेजकत्वे गौरवात्। आकाङ्क्षानिश्चयस्य हेतुत्वे तु अप्रामाण्यज्ञानस्यैवोत्तेजकत्वमिति लाघवम्। *कार्यसहेति*।

(कलाटीका)

*एतदिति*। तद्रूपाकाङ्क्षाज्ञानस्येत्यर्थः। एवं सति प्राप्तदोषं परिहरति *कार्येति*। *तस्य*। एतज्ज्ञानस्य। एवेन पूर्ववर्तित्वव्यवच्छेदः। संस्कारे कल्पनमिति भावः। *अन्यथा*। तेनैव तत्त्वानङ्गीकारे पूर्वव-

मद्बोधहेतोस्तज्ज्ञानस्य द्वितीयबोधात्पूर्वमपि सत्त्वेन तद् दुर्वारं स्यात् ।

अन्वयबोधश्च तदाकाङ्क्षितसकलक्रियाकारकादि-विषयो विवक्षितः ।

एतेन तस्य हेतुत्वे खण्डवाक्यार्थबोधोत्तरं महावा-क्यार्थबोधो न स्यादित्यपास्तम् ।

खण्डबोधस्य क्रियातद्विशेषणकारकतद्विशेषणैत-दन्यतरमात्रविषयकत्वात् । अत एव "सुरतक्रीडापिकी-

---

( कुञ्जिकाटीका )

बोधात्पूर्वं बोधाजनकत्वज्ञाने सत्यपि बोधे सति बोधाजनकत्वज्ञाना-भावान्न पुनर्बोध इत्यर्थः । *तज्ज्ञानस्य* । बोधाजनकत्वज्ञानस्य । *द्वितीयबोधादिति* । प्रथमबोधकाले आपादनीयादित्यादिः । *तत्* । बोधद्वयम् । ननु अवान्तरवाक्यार्थबोधानन्तरं महावाक्यार्थबोधाना-पत्तिरत आह *सकलक्रियेति* । अत एव तात्पर्यविषयान्वयबोधा-जनकत्वमाकाङ्क्षेति परे । *क्रियाकारकेति* । कचिक्रियातद्विशेषण-

( कलाटीका )

त्तिन्वमात्रेण तदङ्गीकारे । *तद्* । बोधद्वयम्, सार्वत्रिकम् । दोषान्त-राभावायाह *अन्वयेति* । किंतद्विवक्षाफलं तदाह *एतेनेति* । अस्यार्थमाह *खण्डेति* । खण्डवाक्यार्थेत्यर्थः । *मात्र* । कैवल्ये । *अतएव* । खण्डवाक्यार्थबोधोत्तरमिष्टमहावाक्यार्थबोधे दोषाभा-वस्येष्टत्वेनेदृशान्वयबोधस्याभिप्रेतत्वादेवेत्यर्थः । अन्यथा सर्वत्र तथा सत्त्वेन तदसङ्गतिः स्पष्टैव । *सुरतेति* । केङ्कारः स्मरकार्मुकस्ये-

नां रवः" "कङ्कणक्वाणः प्रेम तनोतु वो नववयोलास्या-य वेणुस्वनः" इत्यादौ समाप्तपुनरात्तस्य दोषतोक्ता-ऽऽलङ्कारिकैः । क्रियाकारकभावेनान्वयबोधकसकलप-दोक्त्यनन्तरं तद्धटकयत्किञ्चिदन्वयिविशेषणोपादानं हि समाप्तपुनरात्तत्वम् ।

---

(कुञ्जिकाटीका)

योः क्वचित्कारकतद्विशेषणयोः प्रथममन्वय इत्यर्थः । *सुरतक्रीडे-ति* । तन्व्याः कङ्कणक्वाणः वः प्रेम तनोतु । स कीदृशः सुरतक्रीडा-यां याः पिकयः कोकिलाः तासां शब्दः । पुनः कीदृशः, नववयोनृत्या-र्थवेणुस्वनः । अत्र वाक्यार्थे समाप्ते वेणुस्वन इति विशेषणोपादाना-त्समाप्तपुनरात्तत्वम् । *तद्घटकेति* । तद्घटको यः कश्चित्तदन्वयि-नो विशेषणस्येत्यर्थः ।

(कलाटीका)

त्यादिः । *कङ्कणेति* । 'झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरी-ध्वनिः । तन्व्याः कञ्चुकिकाऽपसारणभुजाक्षेपस्खलादित्यादिः । *आ-दिना प्रागप्राप्तेत्यादि । अत्र तनोतु व इति समाप्तमेव वाक्यं नववय इत्यादिविशेषणान्वयायोपात्तम् । अतएवेत्यस्यार्थं सूचयन् फलित-माह *क्रियेति* । वाक्यस्य पुनरुपादानं स्वघटकद्वारेत्याह *तद्घट-केति* । विशेष्यभूतक्वाणेत्यर्थः । शाब्दस्तु 'समाप्तं जनितविवक्षिता-न्वयबोधकं वाक्यं सद्यत् पुनरुपात्तं तद्घटकान्वयिशब्दोपादानेन त-द्घटकद्वारा पुनरनुसन्धानविषय' इति ।

# हरिदास-संस्कृत-सीरिज़् ।

१ पाणिनीयशिक्षादिसंग्रहः । अर्थात् पाणिनीयशिक्षा भाष्यसहिता, अष्टाध्यायीसूत्रपाठः, गणपाठः, वार्त्तिकपाठः, धातुपाठः, परिभाषापाठः, लिङ्गानुशासन, उणादिसूत्रपाठः, फिट्सूत्रपाठः, नवाह्निकभाष्यवार्त्तिकपाठश्चेतद्दशपाठसंग्रहात्मकोऽयं ग्रन्थः मूल्यम् ०-८-०

२ लघुसिद्धान्तकौमुदी । विषमस्थल टिप्पणी सहिता (शिक्षा-सूत्रपाठ-धातुपाठ-गणपाठ-वार्त्तिकपाठ-परिभाषापाठ सहिता ) ग्लेज़ कागज मूल्यम् ०-१२-०
" मोटा रफ कागज " ०-१०-०
" पतला रफ कागज " ०-८-०

३ शब्दरूपावलिः । ( शतशब्दा ) अर्थात् १०० संख्यशब्दानां-रूपाणि । " ०-२-०

४ सारस्वतम् । सटीप्पण पूर्वार्द्धम् । " ०-८-०

५ पूर्वपक्षावली । सपरिष्कृता । " ०-३-०

६ वेदान्तपरिभाषा । धर्मराजाध्वरीन्द्रकृता । शिवदत्त-पण्डितकृतार्थदीपिकाटीका सहिता । वेदान्ताचार्य भट्ट त्र्यम्बकरामशास्त्रिकृत विषमस्थलावबोधिन्या बृहट्टीपण्या समेता । मूल्यम् १-४-०

७ श्रुतबोधः । महाकवि श्रीकालिदासविरचितः । पं० श्री कनकलाल शर्म्मणा ( मैथिलेन) विरचितया परीक्षोपयोगिन्या विमलाख्यया संस्कृत टीकया भाषाटीकया च समलंकृतः । मूल्यम् ०-३-०

८ पुष्टिमार्गीयस्तोत्ररत्नाकरः । पुरुषोत्तमनामसहस्र-षोडसग्रन्थसर्वोत्तमस्तोत्रप्रभृति (८५) स्तोत्रग्रन्थ-समूहात्मकः । मूल्यम् ०-१२-०

९ कर्पूरस्तवः । श्रीमहाकालप्रणीतः । पण्डितराजरङ्ग-नाथ विद्वद्विरचित दीपिकाख्यटीकया, तथा साहित्याचार्य पण्डित नारायणशास्त्रि खिस्ते-कृत-परिमल नामकया टीकया च समन्वितः । मूल्यम् ०-६-०

---

प्रकाशक—

जयकृष्णदास-हरिदासगुप्तः—

चौखम्बा संस्कृत सीरिज़-आफिस, विद्याविलास प्रेस,

गोपालमन्दिर के उत्तर फाटक, बनारस सिटी ।

# काशीसंस्कृतसीरीज़-ग्रन्थमाला ।

इयं काशी-संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते ।

१ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्रम् १ ) रु० १—८

२ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम् । ( वेदान्तं १ ) रु० ८—०

३ वैशेषिकदर्शनम् । पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यांसमन्वितम् (वैशेषिकं१)रु०२—०

४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिकं १ ) रु० ०—६

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः-प्रथम भाग अव्ययीभावान्तः । ( व्याकरणं १ ) रु० ५—०

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादिसमासपर्यन्तः । द्वितीय भाग ( व्याकरणं १ ) रु० ८—०

६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता । ( न्यायं १ ) रु० ६—०

७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम् । ( वेदान्तं २ )रु० ०—८

८ अलङ्कारप्रदीपः । श्रीविश्वेश्वरपाण्डेयनिर्मितः । (काव्यं १) रु० ०—८

९ अनङ्गरङ्गः । महाकविकल्याणमल्लविरचितः । (कामशास्त्रं१) रु० ०—१२

१० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । (ज्यो० १) रु० २—०

११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम् । ( कर्मकाण्डम् १) रु० ०—८

१२ पुरुषसूक्तम् । सायणभाष्य-महीधरभाष्य-मंगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) रु० १—४

१३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम् । ( वेदान्तं ३ ) रु० १—४

१४ कुमारसंभवं महाकाव्यम् । महाकवि श्रीकालिदासवि० । सञ्जीवनी शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं२) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः । ( छंदः १ ) रु० ०—६

१६ कारिकावली । मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा । ( न्यायं २ ) रु० १—०

१७ पारस्करगृह्यसूत्रम्। काण्डद्वये हरिहर-गदाधर० तृतीयकाण्डे हरिहर–जयराम–प्रणीतभाष्येण समलङ्कृतम्। हरिहरभाष्यसहितस्नानत्रिकाण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति–पृष्टोदिवि–शौच–भोजन—कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृतं–टिप्पण्यादिभिः सहितं च। (कर्मकाण्डं २) रु० ३—०

१८ संक्षेपशारीरकम्। मधूसूदनीटीकासहितम् संपूर्ण (वेदान्तं४) रु० ८—०

१९ लघुजूटिका–अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः। (व्याकरणं २) रु० ०—८

२० कातीयेष्टिदीपकः। (दर्शपौर्णमासपद्धतिः) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः। (कर्मकाण्डं) रु० १—०

२१ सप्तपाठि श्रीशिवमाहिम्नस्तोत्रम्। श्रीगन्धर्वराज पुष्पदन्ताचार्यविरचितम्। हरिहरपक्षीय–मधुसूदनीटीकया (संस्कृतटीका–संस्कृतपद्यानुवाद–भाषाटीका–भाषापद्यानुवाद–भाषाबिम्ब) पञ्चमुखीनाम्न्या टीकया–शक्तिमहिम्नस्तोत्रेण च समन्वितम्। (स्तोत्रवि० १) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः। भाषाटीकासहितः। (बौद्धन्याय वि० १) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः। (व्याकरणं ३) रु०४—०

२४ न्यायवार्त्तिकतात्पर्य्यटीका। श्रीवाचस्पतिमिश्रविरचिता। सम्पूर्ण (न्यायविभाग ३) रु० ६—०

२५ मीमांसान्यायप्रकाशः। (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः। (मीमांसा १) रु० २—०

२६ पौरोहित्यकर्मसारः। (टिप्पणीसमलंकृतः) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः। (कर्मकाण्डवि० ३) रु० ०—४

२७ लघुशब्देन्दुशेखरः। म० म० श्रीनागेशभट्टविरचितः अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीयकृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः। (व्या०४) रु० ४—८

२८ रघुवंशमहाकाव्यम्। श्रीकालिदासविरचितम् पञ्चसर्गात्मकम्। म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं० श्रीकनकलाल ठक्कुरकृताऽर्थप्रकाशिकाटीकया च समलङ्कृतम्। (काव्य३) रु० ०-१२

२९ कामसूत्रम्। श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नरासादितया पूर्णया-जयमङ्गलरचितया टीकया समेतम्। बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम्। (काम०२) यन्त्रस्थ

३० न्यायकुसुमाञ्जलीः। न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः। म० म० रुचिदत्तकृतमकरन्दोद्भासित म० म० वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितः। (न्यायं ४) रु० ६—०

३१ परिभाषेन्दुशेखरः। म० म० श्रीनागेशभट्टरचितः। म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या—तत्त्वप्रकाशिकया टीकया च सहितः। (व्याकरणं ५) यन्त्रस्थ

३२ अर्थसंग्रहः। पूर्वमीमांसासारसंग्रहरूपः। श्रीलौगाक्षिभास्करविरचितः। श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षुविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः।(मीमां०२)रु०१—०

३३ न्यायवार्त्तिकम् न्यायदर्शनवात्स्यायनभाष्योपबृंहणम्। परमर्षिभारद्वाजाद्द्योतकरविरचितम्। महर्षि-गोतमादिचरितसम्वलितबृहत्भूमिकासहितम्। (न्यायं वि० ५) रु० ६—०

३४ शुक्लयजुर्वेदसंहिता। वाजसनेयिमाध्यन्दिनशाखीया। श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता। (भाग १-२-३-४)(वैदिकं ३) रु० ८—०

३५ शुक्लयजुर्वेदकाण्वसंहिता। श्रीसायणाचार्यविरचितभाष्यसहिता। १ अध्यायादारभ्य २० अध्यायपर्यन्ता। (वैदिकं ४) रु० ६—०

३६ सिद्धान्तलेशसंग्रहः। श्रीमदप्पयदीक्षितविरचितः। श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः। (वेदान्तं ४) रु० ६—०

३७ काशिका। श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः विद्वद्वर-वामन-जयादित्यविनिर्मिता। (व्याकरणं ६) रु० ६—०

३८ प्राकृतप्रकाशः। भामहकृतः। श्रीमद्वररुचिप्रणीतप्राकृतसूत्रसहितः। टिप्पण्या च संयोजितः। (व्याकरणं ७) रु० १—४

३९ जीवन्मुक्तिविवेकः श्रीमद्विद्यारण्यस्वामिविरचितः। भाषानुवादसमेतः। (वेदान्तं ६) रु० २—०

४० श्रीनारदीयसंहिता। ब्रह्मणोपदिष्टो नारदमहामुनिप्रोक्तो ज्यौतिषग्रन्थः। (ज्यौतिषं २) रु० ०—६

४१ मेदिनीकोशः मेदिनीकारविरचितः। (कोशं १) रु० १—८

४२ मीमांसादर्शनम्। श्रीशबरस्वामिविरचितभाष्यसहितम्। सपूर्णम्। (भाग१—२) (मीमांसा ३) रु० १०—०

४३ न्यायदर्शनम्। श्रीगोतममुनीप्रणीतम्। श्रीवात्स्यायनमुनीप्रणीतभाष्यसहितम्। श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितन्यायसूत्रवृत्त्यनुगतम्। टिप्पण्यादिसहितम् (न्यायं ६) रु० ३—०

४४ दानमयूखः। विद्वद्वरश्रीनीलकण्ठभट्टविरचितः। (धर्मशास्त्रं१) रु० १—८

४५ कालमाधवः। विद्वद्वरश्रीमाधवाचार्यविरचितः। (धर्मशास्त्रं२) रु० १—८

४६ भास्वती । श्रीमच्छतानन्दविरचिता । श्रीमातृप्रसाद ( दैवज्ञभूषण) पाण्डेयेन कृताभ्यां छात्रबोधिनीनाम संस्कृतसोदाहरण भाषाटीकाभ्यां सहिता । (ज्योतिष ३) रु० २—०

४७ फक्किकाप्रकाशः । उपाध्यायोपाह्ववैयाकरणकेसरीबिरुदाङ्कितमथिलेन्द्रदत्तशर्मविरचितः । पं० सीतारामशर्मकृतटिप्पण्या विभूषितः। (व्याकरण ८) रु० १—४

४८ मिताक्षरा । श्रीगौडपादाचार्यकृतमाण्डूक्यकारिकाव्याख्या--श्रीमत्परमहंसपरिव्राजकाचार्यस्वयंप्रकाशानन्दसरस्वतीस्वामिकृता। शंकरानन्दकृतमाण्डूक्योपनिषद्दीपिका च। (वेदा०७) रु० १—४

४९ काव्यप्रकाशः । श्रीमम्मटाचार्यविरचितः । पं० श्रीहरिशङ्करशर्मणा मैथिलेन संगृहीतया नागेश्वरीटीकयाऽलङ्कृतः। (काव्य०४) रु० ४—०

५० अधिकरणकौमुदी । श्रीदेवनाथठक्कुरकृता । (मीमां० ४) रु० १—०

५१ रघुवंशमहाकाव्यम्। श्रीकालिदासविरचितम् म.म. श्रीमल्लिनाथकृतसञ्जीविनीटीकयोपेतम् पं० श्रीकनकलालठक्कुरेण कृता भावबोधिनी टिप्पण्या समलङ्कृतः संपूर्णम् । (काव्य ५) रु० १-४

५२ कायबोधः। साजनीकृत टीकोपेतः। दत्तात्रेय सम्प्रदायाऽनुगतः। रु०—८

५३ रसचन्द्रिका । श्रीविश्वेश्वरपाण्डेय निर्मिता । (काव्य० ६) रु०१—०

५४ अलङ्कारमुक्तावली। श्रीविश्वेश्वर पाण्डेयनिर्मिता। (काव्य०७)रु०-१२-०

५५ वृत्तरत्नाकरः-भट्टकेदारप्रणीतः । नारायणभट्टीयव्याख्यासहितः। सम्पादकनिर्मितविषमस्थलटिप्पणोपेतः । श्रुतबोधच्छन्दोमञ्जरीसुवृत्ततिलकैश्च समेतः । (छंद वि० १) १—८

५६ अलङ्कारशेखरः। केशवमिश्रकृतः। साहित्योपाध्याय श्री अनन्तरामशास्त्रिणा भूमिकादिभिः संभूष्य संशोधितः। (अल०वि०१)रु० १-४

५७ शक्तिवादः। श्रीगदाधरभट्टाचार्यप्रणीतः। टीकात्रयोपेतः। कृष्णभट्टकृतया मञ्जूषया—माधवभट्टाचार्यनिर्मितया विवृत्या श्रीमन्माध्वसंप्रदायाचार्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्न गोस्वामिदामोदरशास्त्रिरचितया विनोदिन्या च समेतः। ( न्या० वि० ७ ) रु० २-०

५८ प्रौढमनोरमा । म. म. श्रीभट्टोजीदीक्षितविरचिता तत्पौत्र म. म. श्रीहरिदीक्षितविरचितलघुशब्दरत्नाख्यव्याख्ययासमेता । म. म. पण्डितश्रीभैरवमिश्रविरचितशब्दरत्नव्याख्यया युक्ता । श्रीयुतभाण्डारीत्युपाह्वमाधवशास्त्रिविरचित प्रभानामकटिप्पण्या समलङ्कृता । श्रीयुतजगन्नाथशास्त्रिविरचितयाव्ययीभावस्य शब्दरत्नप्रदीपकनामकटीप्पण्याऽलङ्कृता ( अव्ययीभावान्तः प्रथमो भागः ) ( व्याकरण वि० ९ ) रु० ५—०

५९ आपस्तम्बगृह्यसूत्रम्। श्रीहरदत्तप्रणीतयाऽनाकुलाख्यया व्याख्यया, श्रीसुदर्शनाचार्यप्रणीतया तात्पर्यदर्शनाख्यया व्याख्यया च समलङ्कृतम्, पृथक् सूत्रपाठेन, पाठभेदेन, मीमांसापदार्थविवरणेन च संयोजितम् । ( कर्म० वि० ५ ) रु० ४—०

६० नाट्यशास्त्रम् । भरतमुनिप्रणीतम् ( सम्पूर्णम ) साहित्योपाध्याय एम.ए. इत्यादिपदवीभाजा पण्डित बटुकनाथ शर्मणा तथा साहित्यशास्त्रि एम.ए. पदवीभृता पण्डित बलदेवोपाध्यायेन च सम्पादितम् । ( नाट्यशास्त्र वि० १ ) रु० ५—०

६१ काव्यालङ्कारः । श्रीभामहाचार्येण विनिर्मितः । काशीविश्वविद्यालयाध्यापकाभ्यां पण्डित बटुकनाथ शर्मा एम० ए० साहित्योपाध्यायः तथा पण्डित बलदेव उपाध्याय एम० ए० साहित्यशास्त्री इत्येताभ्यां भूमिकादिभिः समलङ्कृत्य सम्पादितः, काशी विश्वविद्यालयोपकुलपतिपदं विभूषयद्भिः श्रीमदाचार्यप्रवरैः आनन्दशङ्कर ध्रुव महोदयैः लिखितेन प्राक्कथनेन सनाथीकृतः । (अलङ्कार वि० २) रु० १—८

६२ ब्रह्मवादः । गोस्वामि श्रीहरिरायजी महाराज विरचितः । श्रीगोपालकृष्णभट्ट विरचित विवरणाख्यव्याख्यासमलङ्कृतः । तथा गोस्वामी श्रीव्रजनाथविरचितो ब्रह्मवादः । तथा शुद्धाद्वैतपरिष्कारः श्रीमद्रामकृष्णभट्ट विरचितः । श्रीरघुनाथशास्त्रि विरचित शुद्धाद्वैतपरिष्कारतात्पर्यम् । श्रीहरिशङ्कर शास्त्रि-वेदान्तविशारदेन विस्तृत भूमिकया विविधपारिशिष्टैर्भाषानुवादेन टिप्पण्यादिना च समलङ्कृतः । ( शुद्धाद्वैतसम्प्रदाय वि० १ ) रु० १—०

६३ प्रेमरसायनम् । श्रीविश्वनाथपण्डितरचितम् (का० वि० ८) रु० १—०

६४ व्याप्तिपञ्चकरहस्यम् सिंहव्याघ्रलक्षणरहस्यं च । श्रीमथुरानाथतर्कवागीशकृतम् । न्यायाचार्य पं० शिवदत्तमिश्र विरचित गंगानिर्झरिणीव्याख्यया टिप्पण्यादि विभूषितं च । ( न्या० वि० ८ ) रु० ०—१२

६५ सिद्धान्तबिन्दुः । श्रीमधुसूदनसरस्वती विरचितः । श्रीभगवान् शङ्कराचार्य विरचित दशश्लोकव्याख्यारूपः श्रीगौड ब्रह्मानन्दविरचित न्यायरत्नावली-नारायणतीर्थ विरचित लघुव्याख्या टिप्पणीसहितः । ( वेदान्त वि० ८ ) रु० ५—०

६६ अन्त्यकर्मदीपकः आशौचकालनिर्णयसहितः । प्रेतकर्मब्रह्मीभूतयतिकर्मनिरूपणात्मकः । महामहोपाध्याय पं० श्री नित्यानन्दपन्तपर्वतीय विरचितः । (कर्मकाण्ड वि० ६) रु० १—८

६७ सांख्यदर्शनम् । श्रीमद्विज्ञानभिक्षुकृत सांख्यप्रवचनभाष्यसमलङ्कृतम् । (सांख्य वि० १) रु० २—०

६८ अनेकार्थसङ्ग्रहो नाम कोशः । आचार्यश्रीहेमचन्द्रेण विरचितः । ( कोश वि० २ ) रु० २—०

६९ शिशुपालवधम् । श्रीमन्माघकविनिर्मितं श्रीवल्लभदेवकृतया सन्देहविषौषधिव्याख्यया महोपाध्याय श्रीमल्लिनाथकृतया सर्वङ्कषाव्याख्यया समेतम् । ( सम्पूर्णम् ) रु० ३—८

---

जयकृष्णदास—हरिदासगुप्तः,
चौखम्बा संस्कृत सीरीज आफिस, विद्याविलास प्रेस,
गोपालमन्दिर के उत्तर फाटक बनारस सिटी ।